# Shri Sharabha Sahasranama Stotram

# श्रीशरभसहस्रनामस्तोत्रम्



## Document Information

Text title : sharabheshvarasahasranAmastotram 1 sharabhasAluvapakShirAjasahasranAma

File name : sharabhasahasra.itx

Category : sahasranAma, shiva, stotra

Location : doc_shiva

Author : Traditional

Transliterated by : Ravin Bhalekar ravibhalekar at hotmail.com

Proofread by : Ravin Bhalekar, PSA Easwaran psaeaswaran at gmail.com

Description-comments : AkAshabhairavakalpa

Latest update : Noember 26, 2019

Send corrections to : Sanskrit@cheerful.com



Please note that proofreading is done using Devanagari version and other language/scripts are generated using **sanscript**.

November 26, 2019

*sanskritdocuments.org*



# श्रीशरभसहस्रनामस्तोत्रम्



श्रीगणेशाय नमः ।

श्रीदेव्युवाच ।
देवदेव महादेव भक्तानुग्रहकारक ।
दुर्लभा शारभीविद्या गुह्याद्गुह्यतरा परा ॥ १॥

गुटिका पादुका सिद्धिस्तथा सिद्धिश्च खेचरी ।
शापानुग्रहसामर्थ्यो परकायाप्रवेशने ॥ २॥

सद्यः प्रत्यक्षकामार्थं कैर्न सेव्या सुरासुरैः ।
श्रीशिव उवाच । (श्रीमहादेव उवाच)
लक्षवारसहस्राणि वारितासि पुनः पुनः ॥ ३॥

स्त्रीस्वभावान्महादेवि पुनस्त्वं परिपृच्छसि ।
महागुह्यं महागोप्यं वाञ्छाचिन्तामणिः स्मृतम् ॥ ४॥

न वक्तव्यं त्वया देवि शापितासि ममोपरि ।
सर्वसिद्धिप्रदः साक्षात् शरभः परमेश्वरः ॥ ५॥

तस्य नामसहस्राणि तव स्नेहाद्ददामि ते ।
शृणु चैकमना भूत्वा सावधानावधारय ॥ ६॥

ब्रह्मा विष्णुश्च रुद्रश्च ईशः कर्ताहमव्ययः ।
मोहनस्तम्भनाकर्षमारणोच्चाटनक्षमः ॥७॥

सिद्धिप्रदमसिद्धानां ज्ञानिनां ज्ञानसिद्धिदम् ।
मोक्षप्रदं मुमुक्षुणां नान्यथा शृणु सादरम् ॥ ८॥

वन्ध्या वा काकवन्ध्या वा सद्यः पुत्रप्रदः स्त्रियाम् ।
सर्वशक्तियुतो दाता दयावान् शरभेश्वरः ॥ ९॥

तस्य नामसहस्राणि कथयामि तव प्रिये ।

ॐ अस्य श्रीशरभसहस्रनामस्तोत्रमहामन्त्रस्य,
श्रीभगवान्कालाग्निरुद्रऋषिः, विराड्छन्दः,
श्रीशरभेश्वरपक्षिराजो देवता, ॐ खं बीजं,
स्वाहा शक्तिः, फट् इति कीलकं,
मम धर्मार्थकाममोक्षार्थे जपे विनियोगः ।
तत्र खां इत्यादिना कराङ्गन्यासौ कुर्यात् । तत्र मन्त्रः -
ॐ खां खां खं फट् सर्वशत्रुसंहारणाय शरभसालुवाय,
पक्षिराजाय हुं फट् स्वाहा इति मन्त्रः ।
ॐ भूर्भुवःस्वरोमिति दिग्बन्धः ॥

अथ ध्यानम् ।
चन्द्रार्कौ वह्निदृष्टिः कुलिशवरनखश्चञ्चलात्युग्रजिह्वः
काली दुर्गा च पक्षौ हृदयजठरगो भैरवो वाडवाग्निः ।
ऊरूस्थौ व्याधिमृत्यू शरभवरखगश्चण्डवातातिवेगः
संहर्ता सर्वशत्रून्स जयति शरभः सालुवःपक्षिराजः ॥

इति ध्यानम् ।
मृगस्त्वर्द्धशरीरेण पक्षाभ्यां चञ्चुना द्विजः ।
अधोवक्त्रश्चतुःपाद ऊर्ध्ववक्त्रश्चतुर्भुजः ॥

कालान्तदहनोपम्यो नीलजीमूतनिःस्वनः ।
अरिस्तद्दर्शनादेव विनष्टबलविक्रमः ॥

सटाच्छटोग्रतुण्डाय पक्षविक्षिप्तभूभृते (नमः पक्षविक्षिप्तमूर्तये) ।
अष्टपादाय रुद्राय नमः शरभमूर्तये ॥

इति ध्यात्वा नमस्कृत्य सहस्रनाम पठेदिति सहस्रनामपाठसम्प्रदायः ॥

अथ सहस्रनामानि -
ॐ श्रीं श्रीं सिद्धीश्वरः साक्षात् खें खें (खँ खँ) गर्वापहारकः ।
ह्रीं ह्रीं स्प्रें स्फ्रें ह्सौं ह्सौं ज्लूं ज्लूं पक्षिराजः प्रतापवान् ॥ १॥

ह्रौं शिवाय गिरीशाय तारः संसारपारगः ।
गतिदो मतिदः श्रीशः क्लीं क्लीं कामकलाधरः ॥ २॥

सिद्धिदः शरभो योगी स्फ्रौं शिवः सिद्धिदायकः ।
सर्वकल्मषहर्त्ता च क्रीं क्रीं कालकलाधरः ॥ ३॥

प्रीं प्रीं पीताम्बरधरो भस्मोद्धूलितविग्रहः ।
व्रीं व्रीं विष्णुसमाराध्यः सालुवः शक्तिमान्प्रभुः ॥ ४॥

वीरवीराङ्गणाराध्यो (वीरवीरो गणाराध्यो) हूं हूं सङ्कष्टखण्डनः ।
शङ्करः शङ्कराराध्यो श्रां श्रीं श्रूं शरभेश्वरः ॥ ५॥

ग्रीं ग्रीं गणपतिः सेव्यः पक्षिराजो महाभुजः ।
ऐं श्रीं ह्रां ह्रीं ह्सौं ह्रीं क्लीं परमात्मा सुरेश्वरः ॥ ६॥

स्वाहा श्रीदो महावीरो सर्वः सर्वैनमस्कृतः ।
ऐं क्लीं सौं ह्रौं (ह्रीं) ह्स्फ्रें (ह्व्यैं)
हैं खैं श्रैं हैं परमेश्वरः ॥ ७॥

स्वाहा विद्या निधानः श्रीवामदेवः प्रतापवान् ।
ऐं ऐं वागीश्वरो देवो हैं क्रैं त्रैं रक्षकः शिवः ॥ ८॥

ह्रीं (हैं) फट् स्वाहा व्याघ्रचौरनाशनः सिद्धिसंयुतः ।
ब्रह्माविष्णुशिवाराध्यः ह्रीं शिवाप्राणवल्लभः ॥ ९॥

भ्रैं भ्रीं भस्मेश्वरीयुक्तो मृं मृं मृत्युजयङ्करः ।
विश्वम्भरो विश्वकर्ता विश्वभर्ता गुरोर्गुरुः ॥ १०॥

क्लैं (क्लीं) ह्रीं स्वाहा कीर्तियुक्तो ईश्वरः सकलार्थदः ।
गौरी गिरा महालक्ष्मी ह्रीं ऐं श्रीं नित्यमर्चिता ॥ ११॥

ह्रीं ह्रीं स्वाहा शिवः शम्भो वाचं वाचामगोचरः ।
ब्रह्मण्यो ब्रह्मकृद्ब्रह्म ज्रौं ज्रौं जाग्रन्महेश्वरः ॥ १२॥

ह्रौं ह्रौं स्वाहा धौतपापः शान्तात्मा शङ्करः (शाङ्करः)खगः ।
पक्षीन्द्रो पक्षिराजश्च भक्तपक्षकरः परः ॥ १३॥

उत्कृष्टोत्कृष्टकर्ताऽऽत्मा श्रीं विश्वात्मा विभावसुः ।
क्रीं खीं खीं सुमुखानन्दो घ्रौं ख्रौं म्रौं प्रौं सनातनः ॥ १४॥

ऐं स्वाहा श्रीमहादेवः सृष्टिस्थितिलयङ्करः ।
उग्रतारो महातारो वीरतारो ज्वलोज्वलः ॥ १५॥

कालतारो धरो लोलजिह्वाज्वालो ज्वलोज्वलः ।
श्रीं ह्रीं क्रैं ज्लूं ह्सौं स्वाहा पार्वतीशः परात्परः ॥ १६॥

वरदः साधकानाञ्च राजवश्यं प्रजावशी (ती) ।

रैं रैं ध्रैं ध्रैं धराभारो हर्ता कर्ता धुरोधसः ॥ १७॥

वेदमन्त्रार्थगूढात्मा शास्त्रमन्त्रार्थसम्मतः ।
क्रीं स्वाहा परमो दाता ॐ ॐ निर्वाणसम्पदः ॥ १८॥

क्लौं प्लौं हूं हूं शिवा स्वाहा राज्य (ज)भोगसुखप्रदः ।
सर्वसौभाग्यसंयुक्तः रां रीं रूं रक्तलोचनः ॥ १९॥

सम्पन्नाक्षो विपन्नाक्षः ग्रां (प्रां) ग्रीं (प्रीं) ज्रूं ज्वरमर्दनः ।
क्रीं ह्रीं हूं (ह्रं) फट् पुनः स्वाहा देवदानवसेवितः ॥ २०॥

काली क्रीं ह्रीं शिवा दुर्गा पक्षद्वयलसच्छुभः ।
स्वाहामन्त्रान्वितः सत्यः सत्यः सत्यपराक्रमः ॥ २१॥

भीमो भयानको दक्षो द्रीं द्रूं दक्षमखापहः ।
रोगदोषहरः सिद्धः सिद्धिसाधनतत्परः ॥ २२॥

ह्रौं ह्रीं कालकालज्ञानी मानी दानी सुखावहः ।
ह्रीं फट् स्वाहा कविस्तर्कः तर्कविद्याचरः पुमान् ॥ २३॥

खर्याङ्गः खेचरीविद्या खां खीं खूं खगतेश्वरः ।
श्रीं ह्रीं स्वाहायुतो देवो राजराजो सुरेश्वरः ॥ २४॥

इच्छासिद्धीश्वरो देवो क्रियाशक्तिसमन्वितः ।
आं ईं ऊं ज्ञानसंयुक्तो भगवान्सर्वसर्वजित् ॥ २५॥

ऐं फट् स्वाहा पञ्चतत्त्वात्पञ्चतन्मात्रसायकः ।
पञ्चकूटाष्टकूटेशो शङ्करश्चन्द्रशेखरः ॥ २६॥

वां वीं वूं (व्रं) वैष्णवीविद्या श्रीं श्रीं स्वाहा धरणीधरः ।
अव्ययः सर्वकर्ताऽऽत्मा शिवः कालान्तको हरः ॥ २७॥

भूतवेतालजा बाधा शत्रुबाधा रणोद्भवा ।
ख्रैं ख्रैं (खैं खैं) हूं (हूं) फट् पूर्ण
घे घे (घें घें) सालुवाय प्रतापवान् ॥ २८॥

शीघ्रमारणदेवेशः स्वाहा चण्डपराक्रमः ।
तीक्ष्णनखं तीक्ष्णदंष्ट्रं तीक्ष्णरूपभयङ्करः (रम्) ॥ २९॥

तीव्रभक्तप्रतापोग्रं क्रैं ख्रौं (ख्रैं) स्वाहा स्वरूपकम् ।
सभाजितः सभामान्यः सभासंक्षोभकारकः ॥ ३०॥

क्ष्म्रौं ह्रौ (ह्रौं) क्ष्म्रौ (क्ष्म्रौं) ह्रौं
हूसौं ख्रौं ख्रौं सिद्धि (द्ध)मन्त्रनिवेशितः ।
श्रीं ह्रीं स्वाहा महादेवो आदिदेवो जगन्मयः ॥ ३१॥

सत्कर्ता सत्कृतावर्तो खें खे (खै)ङ्कारो चिदम्बरः ।
दिगम्बरो धराधीशो छ्रीं छ्रीं स्वाहा स्वरूपधृक् ॥ ३२॥

आदिविद्या जगद्विद्या क्लूं प्लूं म्लूं ह्रूं (ह्रूं) सुरोन्नतः ।
वामदक्षिणतोरूपं ह्रीं श्रीं क्लीं शङ्करोऽव्ययः ॥ ३३॥

ख्रौं (ख्रैं) ख्रौं हुं (ह्रूं) हुं (ह्रूं)
पुनः श्रीं श्रीं गिरिजाप्रियदर्शनः ।
स्वाहा विघ्नान्तकः (विद्यान्तकः) सेव्यः सेवाफलप्रदायकः ॥ ३४॥

च्रीं च्रीं छ्रीं क्लीं महाछद्म (द्य) छलहर्ता छलापहः ।
श्रीं ह्रीं स्वाहा शिवः शम्भुर्देवासुरनमस्कृतः ॥ ३५॥

कनकाङ्गदको धीरो मन्त्रतन्त्रवरप्रदः ।
मन्त्रतन्त्रपराधीनो मन्त्रतन्त्रविहारकः ॥ ३६॥

ऐं ह्रीं क्लीं मन्त्रसन्तुष्टो प्रें (फ्रें) स्वाहा परमेश्वरः ।
विश्वव्यापी चाव्ययात्मा सिद्धाचारः सुरार्चितः ॥ ३७॥

(विश्वव्याप्यप्रमेयात्मा सिद्धाचौरैः सुरार्चितः)
ह्रीं श्रीं क्लीं कमलानन्दो कालकालो निरामयः ।
हौं (ह्रौं) शिवायनमः स्वाहा भवानीशो भयापहः ॥ ३८॥

ज्रीं क्लीं ज्लूं ज्लूं ह्स्प्रें (ह्स्फ्रौं) ह्रौं ह्रां ह्रां हंसः स्वरूपकः ।
विकारहर्ता सर्वज्ञो सर्वशत्रुक्षयङ्करः ॥ ३९॥

ह्रूं ह्रूं (ह्रूं ह्रूं) स्वाहा महादेवो मुनीनां प्राणदायकः ।
स्त्रौः ह्रौं विरागी क्रोधात्मा भ्रूं भ्रूं भस्मेश्वरो हरः ॥ ४०॥

लोकपूज्यो विलोमात्मा मातृकापरि (वर्ण)चारकः ।
क्लीं त्रीं फट् श्रीं जगद्ध (द्ध)र्ता स्वाहा विश्वम्भरो हरः ॥ ४१॥

सिद्धिदातातिरक्ताक्षो रक्तजिह्वः सहस्रपात् ।
चण्डवातादिवेगात्मा ह्रीं ह्रीं क्लीं चण्डिकार्चितः ॥ ४२॥

रुण्डमालाधरः श्रीमान् ह्रौं ह्रौं स्वाहाखिलेश्वरः ।
धनधान्यागमः कर्ता कालहर्ता महेश्वरः ॥ ४३॥

खें खें ह्रूं फट् पुनः सौं ह्रौं क्लीं स्वाहा भूतपालकः ।
भूतात्मा परात्मा च दुःखदुष्टदुरासदः (दुःखो दुष्टो दुरासदः) ॥ ४४॥

सत्यसङ्कल्पकर्ताऽऽत्मा भूतनाथोऽव्ययः शुचिः ।
ह्रीं क्रीं ह्रीं क्रीं (क्रीं क्रीं) शिवानन्दो मदिरानन्दक (न)न्दनः ॥ ४५॥

वामविद्याविहारी च क्रीं स्वाहा यक्षतर्पितः ।
ह्रीं स्वाहा खा (खां)तनुः खा (स्वा)त्मा खैं खैं ह्रूं फट् स्वाहा तृषापहः ॥ ४६॥

क्षुधातृषा पहारी च क्षुधातृष्णा (घ्मा)विवर्धनः ।
निरञ्जनो निराकारो निर्विकारो धराधरः ॥ ४७॥

यन्त्रमन्त्रप्रतापोग्रपरकृत्याविनाशनः ।
ह्रीं ह्रीं कृत्यकरः शम्भुः परकृत्याविषापहः ॥ ४८॥

आत्मविद्याविहारी च क्षुद्रविद्याविनाशकः ।
श्रीं ग्लीं खैं (स्वैं) फट् पुनः स्वाहा शङ्खासुरविनाशनः (कः) ॥ ४९॥

त्रां त्रृं (त्रां नृं) नृसिंहतेजोग्रान् ज्वलो (ल)ज्ज्वलनवर्चसः ।
खौं खौं खां खां (खैं खां खां) पुनः
प्रें प्रें (फ्रें फ्रें) ह्रूं फट् स्वाहा मदापहः ॥ ५०॥

गर्वगाम्भीर्यसिंहस्य नृसिंहस्य (सर्वदुष्ट)विनाशकृत् ।
गुणोदारो गुणाधारो ह्रीं फ्रें (फ्रैं) शब्दपरायणः ॥ ५१॥

ऋषीणां सिद्धिकर्ताऽऽत्मा श्रीं स्वाहा धनदार्चितः ।
तेजोमयः सहस्राक्षो ह्रीं स्वाहा हव्यभुक् स्वराट् ॥ ५२॥

क्लीं क्लीं क्लूं क्रैं (खें) ह्स्प्रें (ह्स्फ्रौं) ह्सौं ऐश्वर्यनिलोऽनलः ।
एकपादो द्विपादश्च बहुपादश्चतुष्पदः ॥ ५३॥

क्रीं स्वाहा श्री (श्रीं)हयग्रीवो वीराराधितपादुकः ।
मारीभूतमहाप्रेतवासुदेवमयो हरः ॥ ५४॥

भूतक्रीडा सुरक्रीडा क्रीडागन्धर्वकिन्नरः ।
दिव्यभोगी सुरापक्षो ह्रीं ह्रीं खां फट् परं पदः ॥ ५५॥

व्याधिहारी व्याधिहर्ता व्याधिनाशनतत्परः ।

वामी वाममार्गनिरतो सिद्धसाध्यसुसिद्धिदः ॥ ५६॥

पुष्टिदस्तुष्टिदः स्वामी समर्थः सर्ववीर्यवान् ।
ग्लौं ग्लौं ह्रीं क्लीं ह्सौं श्रीं श्रीं ह्रूं ह्रूं (ह्रुं ह्रुं) स्वाहा महेश्वरः ॥ ५७॥

एहि एहि महावीर एहि पक्षीन्द्र पक्षिराट् ।
ऐं पा (घा)ण्डुवेषो भगवान्कालरूपी कलाव (क)रः ॥ ५८॥

वरिष्ठो धनदो शिष्टा (ष्टो)विशिष्टः कुलरक्षकः ।
धर्माधिपो धर्ममूर्तिः ब्रह्म ब्रह्मविवर्द्धनः ॥ ५९॥

घां घां घों घों शनिरतो शरभः सर्वकामदः ।
फ्रें फ्रें श्रीं ह्रीं ह्सौं ह्रीं फट् पक्षीन्द्रो भगवान्हरः ॥ ६०॥

क्रौं क्रौं ह्रौं ह्रौं ह्सौं श्रीं ह्रीं ह्रूं (ह्रुं) फट् शिवङ्करः ।
शरभः कमलानन्दो उग्रोग्रः परमेश्वरः ॥ ६१॥

भू भुजङ्गमगस्तिश्च पत्रपूजापरिग्रहः ।
मन्दारकुसुमामोदो मालतीकुसुमप्रियः ॥ ६२॥

ग्लीं ग्लीं श्रीं श्रीं ह्सौं ह्सौं ह्रीं ह्रीं क्लीं क्लीं इष्टार्थसिद्धिदः ।
असिताङ्गो सिताङ्गश्च पीताङ्गः परकृत्यहा ॥ ६३॥

खैं खैं स्वाहा सुरश्रेष्ठो विश्वात्मा विश्वजीवनः ।
रुरुचर्मपरीधानो रुरुभैरववन्दितः ॥ ६४॥

चण्डश्चण्डाङ्गचण्डात्मा चञ्चच्चामरवीजितः ।
हौं हौं हौं (हौ हौ) पक्षिराजाय पक्षिराजाय क्रीं स्वराट् ॥ ६५॥

श्रीं श्रीं क्लीं ह्रीं ह्सौं स्वाहा योगीशो योगिनीप्रियः ।
कर्त्ता हर्ता कालातीतो काल (कालः)सङ्कर्षणो घनः ॥ ६६॥

उन्मत्तोन्मत्तमर्दश्च (मर्द्दी च) भैरवोन्मत्तसंयुतः ।
मधुपानी मदाहारी आधारी सर्वदेहिनाम् ॥ ६७॥

मांसभक्षणकर्ताऽऽत्मा विश्वरूपी महोज्ज्वलः ।
ऐश्वर्यदाता भगवान्श्री (श्रीं) श्रीं लक्ष्म्या प्रपूजितः ॥ ६८॥

कामदेवकलारामी अभिरामी (कृतान्तः) शिवनर्तकी ।
महापापहरोदर्क (र्की)वितर्क (र्की)राज्यकृद्वशी ॥ ६९॥

श्रीं ह्रीं स्वाहेश्वरो देवो कालीदुर्गावरप्रदः ।
कौतुकी कौतुकायुक्तो कां कीं स्वाहा भयापहः ॥ ७० ॥

महादेवो विरूपाक्षो शूलपाणिः पिनाकधृक् ।
शम्भुः पशुपतिर्दक्षो दीक्षितानाञ्जयङ्करः ॥ ७१ ॥

दां दां दीं दीं द् हौं डीं डीं डिण्डिभा वानरः (वारणः) परः ।
ह्रीं स्वाहा पारगोस्वामी ढ (ठ)णङ्कणितपातकः ॥ ७२ ॥

ईश्वरो ईप्सितार्थाङ्गो ईं ईं एवतमातृकः ।
ह्स्प्रें (ह्स्फ्रौं) ख्फ्रें ह्सौं ह्रीं ह्रीं क्ष्म्रीं त्रीं श्रीं
कमल (मलक)द्वयलाञ्छितः ॥ ७३ ॥

श्रीचक्ररक्षणोद्युक्तो त्रां त्रीं (त्रीं त्री) शत्रुविमर्दनः ।
गङ्गाधरो गाधमूर्तिः श्लूं स्वाहा सर्वसम्पदः ॥ ७४ ॥

हरो मृत्युहरः कर्ता विधाता विश्वतोमुखः ।
एकवक्त्रो द्विवक्त्रश्च त्रिवक्त्रः पञ्चवक्त्रकः ॥ ७५ ॥

चतुर्वक्त्रः सप्तवक्त्रो षष्टवक्त्रोऽष्टवक्त्रगः । (तथैवश्चाष्टवक्त्रगः)
नववक्त्रो महाधीरो ह्रीं श्रीं खें खः सहस्रकः (गः) ॥ ७६ ॥

दशवक्त्रो महातेजो कामिनीमदभञ्जनः ।
ज्येष्ठो श्रेष्ठो महाश्रेष्ठो तथैकादशवक्त्रमि? ॥ ७७ ॥

सर्वेश्वरी पराकाली सुन्दरी सुरसुन्दरः ।
श्यामचञ्चुपुटो दीप्तो रक्तनेत्रो भयङ्करः ॥ ७८ ॥

श्मशानवासी सर्वात्मा सैन्यस्तम्भनकारकः ।
सेनानीपूजितपदो सेनापतिजयङ्करः ॥ ७९ ॥

फ्रों च्रीं क्लीं त्रूं (भ्रूं) तथा आं ह्रीं क्रों हूं (ह्लूं) फट् (फट्कार) स्वरूपकः ।
कार्यकर्ता कार्यवक्ता कार्यसाधनतत्परः ॥ ८० ॥

श्रीं ह्रीं श्रीं क्लीं पुनः क्रीं क्रीं स्वाहा दुष्टार्थखण्डनः ।
परब्रह्मस्वरूपात्मा आत्मतत्त्वमयः पुमान् (स्वयं हरः) ॥ ८१ ॥

विद्यातत्त्वमयो देवो शिवतत्त्वस्वयंहरः ।
सर्वतत्त्वार्थतत्त्वात्मा कामिन्याकर्षणो हरः ॥ ८२ ॥

क्लैं क्लैं क्लूं म्लूं (ह्रीं) ह्सूं ह्लीं ।

श्रीं श्रीं श्रीं क्रीं क्रीं फट् परमं पदः ।
व्याधिहारी विहारी च क्रोधाद्राज्यविनाशनः ॥ ८३॥

रुधि (चि)राहारसन्तुष्टो रक्तपः (ररूपः) परमोऽव्ययः ।
पुण्यात्मा पापनष्टात्मा कालभैरवभैरवः ॥ ८४॥

द्विजिह्वः पञ्चजिह्वाख्यः सप्तजिह्वः सनातनः ।
हूं हूं हूङ्कारचेतात्मा (हूं हूं हूं वेगात्मा) खें खें खण्डायुधान्वितः ॥ ८५॥

भ्क्ीं भ्क्ीं श्रीं ह्रीं ह्सौं क्लीं क्लीं ह्रीं हूं स्वाहा महाबली ।
कपाली कपिलाधारी क्रूं क्रूं क्रूं भगवान्भवः ॥ ८६॥

सिध्या (द्धा)दिसेवितः श्रीं श्रीं ह्रौं ह्रौं स्वाहा जगन्मयः ।
चिन्मयश्चित्कलाकान्तः चैतन्यात्मा प्रतापयुक् ॥ ८७॥

कूं व्रूं ह्रुं (ह्रूं) श्रूं ह्सौं हौं हौं (ह्रौं ह्रौं) ॐ शिवाय नमः पदम् ।
त्रिनेत्रः परमानन्दो ह्रीं फट् स्वाहा सुरवरः (स्वरोवरः) ॥ ८८॥

वरदो वरदाधीशो वायुवाहनवाहकः ।
वृषभारूढसर्वात्मा हूं हूं हूं परमेश्वरः ॥ ८९॥

श्रीं ह्रीं ह्रीं ह्रीं ह्लौं क्रीं ह्रीं श्रीं श्रीं स्वाहामयो गुरुः ।
बृहस्पतिस्वरूपात्मा इन्द्रात्मा चन्द्रशेखरः ॥ ९०॥

चन्द्रचूडश्चन्द्रधारी (चन्द्रश्चन्द्रार्धधारी च) चन्द्रार्धकृतशेखरः ।
ताम्बू (ङ्का)लचर्वणीधाता रक्तदन्तः सुरोहितः ॥ ९१॥

कङ्कालधारी मुण्डात्मा रुण्डमालाधरः शिवः ।
व्याघ्राम्बरधरो धाता हर्ता संसारसागरः ॥ ९२॥

यमराजभयत्रासनाशनः सर्वकामुकः ।
भ्र (भृ)ष्टकर्ता असुरद्वेष्टा देवानामभयङ्करः ॥ ९३॥
सङ्ग्रामवा (चा)री धर्मात्मा सङ्ग्रामे जयवर्धनः ।
राजद्वारे सभामध्ये राजराजेश्वरः शिवः ॥ ९४॥

ह्रीं क्लैं (क्लीं) क्लीं क्लूं ह्स्रें (ह्स्फ्रें) ऐं मोहनः सर्वभूभुजाम् ।
विश्वरूपो विशाम्भोक्ता योगोऽष्टाङ्ग (योगाष्टाङ्ग)निषेवितः ॥ ९५॥

जयरुद्र (रूप) महाभाग वीरवीराधिपोज्ज्वल ।
ऐं फट् ह्रीं फट् शिवः त्रीं फट् क्रीं फट् हूं फट् करः परः ॥ ९६॥

भस्मासुरेन्द्रवरदो भस्मासुरविनाशकः ।
पञ्चावा (पञ्चांवी)नवनाथात्मा षडाधारमयो हरः ॥ ९७॥

षड्दर्शनसमः पुण्यः श्रीं ह्रीं क्लीं पुण्यदर्शकः ।
अकारादिक्षाकारान्तो वर्णमात्रार्थमात्रकः ॥ ९८॥

आं आं ईं ईं ह्लौं ह्रीं श्रीं सौः (सौं) शिवः पापखण्डनः ।
ज्रां क्लीं ज्लूं क्लीं ह्सौं सौं हौं श्रीं स्वाहा ईशः परात्परः ॥ ९९॥

एकाहिको द्व्याहिकश्च तृतीयश्च चतुर्थकः ।
सर्वज्वरहरोदर्को ज्वरबाधानिवारणः ॥ १००॥

राजचौराग्निबाधा च ह्रीं (कीं) हूं शमनकारकः ।
च्रीं ह्स्फ्रें हौं ह्रीं ह्सौं (ह्रौं) ह्रीं फट् स्वाहा शङ्करशङ्करः ॥ १०१॥

महाराजाधिराजश्च राजराजोऽखिलेश्वरः ।
क्रीं छ्रौं ह्रीं फट् शिवायेति शरभाय नमो नमः ॥ १०२॥
भीषणाय त्रिशाशाखाय आदिमध्यान्तवर्जितः ।
आदिविद्या महाविद्या क्लीं छ्रीं ह्रीं खैं ह्स्प्रें (ह्सौं) हरः ॥ १०३॥

हूं हूं स्वाहा अमेयात्मा वरदो वरदेश्वरः ।
निष्कलङ्को वेद (यदा)वक्ता वक्ता शास्त्रस्य बुद्धिमान् ॥ १०४॥

कर्ता कारणमीशानो भूर्भुवःस्वः स्वरूपकः ।
कुल (कल)मार्गरतः कौलः कौलिकानां धनप्रदः ॥ १०५॥

सुखराशिनिधानात्मा विज्ञानघनसाधनः ।
कालौ कल्मषहर्ताऽऽत्मा दुष्टम्लेच्छविनाशनः ॥ १०६॥

हूं खें खें खें ह्रीं ह्सौं हौं श्रीं क्लीं च्रीं ह्रीं ह्रीं नमो नमः ।
स्वाहा सर्वांगमाचारी (रो) विचारी परमेश्वरः ॥ १०७॥

काशी माया तथाऽयोध्या मथुरा कान्त्यवन्तिका ।
निवासी सर्वतीर्थात्मा कोटितीर्थप (प्र)दाश्रयः ॥ १०८॥

गङ्गासागरसिन्धुश्च प्रयागो पुष्करप्रियः ।
नैमिषी नैमिषारण्यी नैमिषारण्यवासिनः ॥ १०९॥

पुष्करी पुष्कराध्यक्षो कुरुक्षेत्री च कौरवः ।
गोदावरी गया चैव श्रीगिरिः पर्वताश्रयः ॥ ११०॥

गुहानिवासी भगवान् शरभः कमलेक्षणः ।
नृसिंहगर्वहर्ताऽऽत्मा शुद्धाचाररतः सदा ॥ १११॥

सर्वधर्ममयो धीरो सर्वदेव (वेद)मयः शिवः ।
ह्रीं फट् क्रीं फट् नमः खें फट् मन्त्रानां सिद्धिसम्पदः ॥ ११२॥

इति नाम्नां सहस्राख्यां शरभस्य महात्मनः ।
पूजाकाले निशिथे च मध्याह्ने प्रपठेत्प्रिये ॥ ११३॥

प्रातःकाले च सन्ध्यायां स भवेत्सम्पदां पदम् ।
भौमावस्यां चतुर्दश्यां संक्रान्तौ रविभौमयोः ॥ ११४॥

यः पठेद्भक्तिसंयुक्तो तस्य सिद्धिर्नसंशयः ।
शनिमङ्गलवारे च उर्ध्वदृष्टिः पठेन्नरः ॥ ११५॥
स भवेत्पार्वतीपुत्रो सर्वशास्त्रविशारदः ।
राजानो दासतां यान्ति भवेत्सर्वजनप्रियः ॥ ११६॥
असिताङ्गो रुरुश्चण्डो क्रोधश्चोन्मत्तभैरवः ।
कपाली भीषणश्चैव स्वयम्भैवभैरवः ॥ ११७॥
ये ये प्रयोगास्तन्त्रेषु तैस्तैसाधय यत्फलम् (तेषु तैस्साधयेत्फलम्) ।
तत्फलं लभते क्षिप्रं नामसाहस्रपाठतः ॥ ११८॥
भूतप्रेतपिशाचश्च वेताला सिद्धिचेटकाः (सिद्धचेष्टकाः ।
ते सर्वे विलयं यान्ति साधकस्यास्य दर्शनात् ॥ ११९॥
सिंहा ऋक्षा वानराश्च व्याघ्रास्सर्पा वराहकाः ।
गजोष्ट्राक्रूरसत्त्वाश्चयेचान्येविषधारिणः ॥ १२०॥

ते सर्वे विलयं यान्ति साधकास्यास्य दर्शनात् ।
अष्टम्यां वा चतुर्दश्यां नवम्यां गुरुसंयुतम् (तः) ॥ १२१॥

पूजयेत्परया भक्त्या स भवेत्सम्पदापदम् (भवेयुस्सर्वसम्पदाः) ।
यो निन्दां कुरुते नित्यं नामसाहस्रपाठके ॥ १२२॥

ते दुष्टा नाशमायान्ति स्वकर्मस्या (स्वकर्मणोऽ)पराधतः ।
मोहनस्तम्भनाकर्षमारणोच्चाटनादिकम् ॥ १२३॥

पाठमात्रेण सिद्ध्यन्ति एतत्सत्यं न संशयः ।
श्मशानाङ्गारमाहृत्य (नाङ्गारमादाय) सपर्यां कुजवासरे ॥ १२४॥

साध्य (ध्व)नामलिखेन्मध्ये पीतसूत्रेणवेष्टयेत् ।

निःक्षिपेच्छत्रुभवने तस्य नश्यन्ति सम्पदः ॥ १२५॥

पुत्रनाशं कीर्तिनाशं धननाशं गृहक्षयम् ।
क्षयः सर्वकुटुम्बानां भूयात्सत्यं न संशयः ॥ १२६॥

गोपनीयमिदं तन्त्रं सद्यः प्रत्ययकारकम् ।
न देयं यस्य कस्यापि दत्वा सिद्धिक्षयो भवेत् ॥ १२७॥

स्वमातृयोनिवद्गोप्या विद्यैषेत्यागमा जगुः ।
पठनीयमिदं नित्यं आत्मनः श्रेय इच्छता ।
न मुञ्चति गृहं तस्माल्लक्ष्मी वाणी सदैव हि ॥ १२८॥

॥ इति श्रीआकाशभैरवकल्पे उमामहेश्वरसंवादे
शरभेश्वरसहस्रनामस्तोत्रं सम्पूर्णम् ॥

Words between parentheses are variations found in different manuscript.

Encoded by Ravin Bhalekar ravibhalekar@hotmail.com

Proofread by Ravin Bhalekar, PSA Easwaran psaeaswaran at gmail.com

*Shri Sharabha Sahasranama Stotram*

pdf was typeset on November 26, 2019

Please send corrections to *sanskrit@cheerful.com*

